# वासिष्ठ शिक्षा

## अथ वासिष्ठ शिक्षा

अष्टषष्ठिं वदन्त्येके चतुष्षष्ठिमथापरे
त्रिषष्ठिमितरे वर्णानष्टपञ्चाशतं परे १
स्वराः षड्विंशतिः प्रोक्ता स्पर्शाः स्युः पञ्चविंशतिः
चत्वारश्च तथान्तस्थाः षडूष्माणः प्रकीर्तितः २
अनुस्वारो विसर्गश्च चत्वारश्च यमास्स्मृताः
उत्सृष्टश्चेति वर्णानामष्टषष्ठिरुदाहृता ३
विना सन्ध्यक्षरह्रस्वैश्चतुष्षष्ठि प्रकीर्त्तिता
त्रिषष्ठिस्तैर्विना ज्ञेया ऋवर्णेन प्लुतेन च ४
सन्ध्यक्षरप्लुतानाञ्च ऋकारप्लुतमेव च
वर्जयित्वा परे वर्णा अष्टपञ्चाशदीरिताः ५
मनो वक्तुर्विवक्षायामावहन्ति जरानलम्
स वायुं प्रेरयत्यूर्द्ध्वं स च मूर्द्धानमुत्थितः ६
तत्र प्रतिहतो वक्त्रे विशीर्णो वर्णतां व्रजेत्
स्थानैः प्रयत्नैः करणैः बहुरूपत्वमश्नुते ७
यत्र निष्पाद्यते वर्णः तस्थानमभिधीय्यते
अष्टौ स्थानानि वर्णानां उरः कण्ठश्शिरस्तथा ८
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च
अकुहाः सविसर्गा स्युः कण्ठ्या इचुयशाः पुनः ९
तालव्याः स्युस्सदुत्स्पृष्टा उपूपद्ध्मा स्युरोष्ठजाः
जातामूर्द्धन्यृटुरषा दन्त्यान् तुलसा स्मृताः १०
एदैदौ कर्णतालव्या वोष्ठ्यौ कण्यौ परावुभौ
जिह्वामूलोद्भव जिह्वामूलन्दन्तोष्ठणस्तु वः ११
पञ्चमानां यमानाञ्च नासिका स्थानमुच्यते
विसर्गविहितञ्च स्यादनुस्वारश्च नासिकाम् १२
अन्तस्था पञ्चमेषु स्यादौरस्यो हस्तुनान्यथा

पञ्चमः पृथगुच्चा मध्या हकारे परतस्थिते १३
न वायुं हमसंयोगे नासिकाभ्यां समुत्सृजेत्
ननदेदुः प्रयोक्तुर्यत् प्रयत्नस्स पुनर्द्विधा १४
बाह्य आभ्यन्तरश्चेति चतुर्थाभ्यन्तरा स्मृताः
दुस्पृष्टमीषत्स्पृष्टत्वं विवृतं संवृतं तथा १५
यथा कण्ठबिलस्थान पर्यन्तास्तु परस्वरम्
स्पृशन्ति स्पृष्टता नाम अगुण आविर्भवेत्तदा १६
ईषस्पृशन्त्यभियदा तदैषस्पृष्टता भवेत्
यदा स्पृशन्ति दूरेण तदा विवृतता स्मृता १७
यदा स्पृशन्ति सामीप्यं तदा संवृतता भवेत्
स्पृष्टास्पर्शा स्युरन्तस्था दुस्पृष्टसहिताः पुनः १८
ईषस्पृष्टा तथोष्माणस्सानुस्वारविसर्गकाः
स्वराश्च विवृतास्तेभ्य एतावदधिकं पुनः १९
विवृतादधिकं ताभ्यामेदैतौ तु द्वयावपि
आकारः संवृतो कारः प्रयत्ना अन्तरा इमे २०
संवारश्च विवारश्च स संवारविवारकाः
अरवृदानसंज्ञाश्च नादश्वास हकारकाः २१
घोषाघोषौ महाप्राण वूष्माल्पप्राण एव च
कालस्वरा इमे बाह्याः प्रयत्नाः परिकीर्त्तिताः २२
वर्णोच्चारणकालेषु कर्णाकाशस्य संवृतौ
संवारस्तस्य विवृतौ विवारो जायते तथा २३
स्यात्संवार मस्तयोः
नादस्यात्संवृते कार्यः प्रयत्नः परिकीर्त्तितः २४
नाद स्यात्संवृते कर्णे बिलेऽस्मिन्विवृते पुनः
श्वासो हकारस्तमन्त्ये स तस्यादुभयात्मनः २५
यदा नादो हकारो वा तदाघोषस्तु जायते

स्वरघोषवतामुक्तस्संवारो नाद एव च २६
अघोषेषु विवारश्च नादश्चापि व्यवस्थितौ
अन्तस्था ह तृतीय्याश्च चतुर्थाः पञ्चमास्तथा २७
अनुस्वारश्च दुस्पृष्टो घोषवन्त इमे मताः
ऊष्मणा आदितः पञ्च विसर्गः प्रथमास्तथा २८
द्वितीय्या अप्यमी वर्णाः अघोषाः समुदीरिताः
विसज
जनीय्या दुस्पृष्टा द्वितीय्यास्स चतुर्थकाः २९
अनुस्वारस्तथोष्माणो महाप्राणाश्च सोष्मकाः
अन्तस्थाः प्रथमाश्चैव तृतीय्याः पञ्चमास्तथा ३०
वर्गाणां मुनिभिः प्राज्ञैः अल्पप्राणाः प्रकीर्त्तिताः
यमानां प्रथमादीनां वर्गादीनां प्रथमादिवत् ३१
स्पृष्ठता द्या वर्णभावाभवन्तीति निबोधत
एकम्मात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ३२
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनस्त्वर्द्धमात्रिकम्
ह्रस्वस्य रूपञ्जानीयाच्चतुर्भिरणुभिस्तथा ३३
दीर्घस्य द्विगुणं विद्यात्त्रिगुणन्तत्प्लुतस्य च
अणुस्त्रादिरिति प्राज्ञैम ३४
मत विवर्त्मणाः
मनोवस्थमणुः विन्द्याद्वा गवस्थद्विराणवः ३५
त्रिराणवन्तु जिह्वाग्रे निसृतो मात्रिकस्मृताः
स्वस्थे नरे सुखासीने यावत्स्पन्दति लोचनम् ३६
तावन्मात्रं विजानीय्यादिह कालः स पञ्चसु
अङ्गुलिस्फोटनं यावत्तावन्नित्यं परे विदुः ३७
ह्रस्वदीर्घप्लुताख्यानाममचाममात्रा विगृह्यते
चाषकाकमायूराणां रणितानि निदर्शनम् ३८

ददा-- ते प्रचयौ तथा
एकश्रुतिश्च पञ्चैते स्वरा वर्णसमाश्रयाः ३९
उच्चैरुदात्तो विज्ञेयो नीचैस्यादनु---
---रस्यादुदात्तानुदात्तयोः ४०
तथैव प्रचयस्तेषां समाहार उदाहृतः
ततोऽप्युच्चैस्तरामर्द्धे त्येवमनवस्थितः ४१
------------णोत्तरेणैषामुदात्तं प्रत्युदीरितम्
पूर्वपूर्वप्रयुक्तस्य तस्य स्यादनुदात्तता ४२
उत्तरोत्तरसंबन्धे अनुदात्तताम्
आपद्येतानुदात्तस्तु पूर्वपूर्वोदितं प्रति ४३
कर्णाकाशस्य सूक्ष्मत्वमङ्गानान्दृढता तथा
स्वरस्य रौक्ष्यं गात्रस्य प्रसारस्तस्थता तथा ४४
दन्तस्य दैर्घ्यमिति षष्टिगुणा उच्चैष्ट्वकारकाः
गात्रसंश्रृतरङ्गानां शैथिल्यं स्निग्धताद्ध्वनैः ४५
कर्णस्य ह्रस्वतास्थौल्यंखस्यनीचैष्वकारकाः
उच्चानामपि नीचानां संहिता वृत्तरोत्तरम् ४६
उच्चादुच्चतरं नीचं नीचान्नीचतरं व्रजेत्
द्रव्ययोर्भिन्नगुणयोरन्योन्यानुप्रविष्टयोः ४७
अविचिन्तपृथक् भावो यथान्यो गृह्यते गुणाः
अन्यो विषमश्रुत्योस्तथोदात्तानुदात्तयोः ४८
संसर्गरूपस्वरिते श्रुतिरन्योपलभ्यते
अणुमात्रमुपादाय शिष्टन्निघ्नन्तिके चन ४९
तदा सर्वत्र कम्पस्यात्तन्वमिति पदे यथा
नैवमुच्चपरत्वेन शेषमेकश्रुतिर्भवेत् ५०
व्यतिरेकेण नीचस्यादिति तत्र व्यवस्थितिः
उच्चकंपेषु पुटता पारिशेष्येषु पाटवः ५१

स्वरेषूदात्तभागस्येत्येवं विषयकल्पना
नित्यः क्षैप्रोऽभिनिहितस्तैरोव्यञ्जन एव च ५२
तिरोविरामः प्रश्लिष्टः पादवृत्तश्च सप्तमः
स्वर्यते यद्यकारेण वकारेणापि वाक्षरम् ५३
सरित्यस्यात् पदस्यादावनादौ निहतात्परः
क्व वीर्यं
सज्यावस्य निघातस्य निवृत्तावपि नित्यता ५४
नाव्यंप्रतिश्रृणाति
इवर्णोकारयोर्यत्वे वत्वे वा क्षैप्र उच्चयोः
ऊत्यश्यामदिच्छवन्ति
अकारादेश ओकार एकारो स्वरितः कृतः ५५
नीचलुप्तोऽन्तराकारः प्रोक्ताऽभिनिहतो बुधैः
सोऽब्रवीत्
उदात्तादुत्तरस्वारस्तैरोव्यञ्जनमुच्यते ५६
अवग्रहात्परं यत्र स्वरितं स्यादनन्तरम्
प्रजात्यै
तस्य प्रतिनिहतत्वं केचिदिच्छन्ति सूरयः ५७
याज्यै वैनम्
यस्तु स्वरित ऊभावे प्रश्लिष्टस्स उदाहृतः
मासूत्तिष्ठन्
विवृतौ पदयो स्वारः पादवृत्तः प्रकीर्त्तितः ५८
तिरोविरामं तं विद्यादुदात्तो यद्यवग्रहः
यः पदाद्ध्ययने नीचः स्वर्यते संहिता विधौ ५९
तिरोविराममाहुस्तं केचित्प्रातिहतं परे
इषे त्वा
स्वरितस्य पदान्तस्य सन्धाने यदुदात्तता ६०

सप्तस्वारानतिक्रम्य स्वरितो वर्त्तते क्वचित्
अल्पवायुस्तु तस्य स्यात्पादवृत्त इति स्मृतः ६१
प्रयुज्ये त्याहुः
द्वौ मासौ
नित्यक्षैप्रौ दृडेतरौ दृढो भिनिहतस्मृतः
तिरोविरामप्रश्लिष्टौ प्रोक्तौ मृदुतरावुभौ ६२
चतुर्थः पादवृत्तश्च तस्मादल्पतरौ स्मृतौ
दृढस्वरस्य विद्वद्भिः प्रयत्नोऽधिक्यमिष्यते ६३
मृदुमल्पतरञ्चैवं मद्ध्यमेन तु कारयेत्
त्रयाणामादितोऽन्योऽन्यं सन्निपातेऽणुमात्रया ६४
निहन्यमानः स्वरितः अणुमात्रक उच्यते
एष एव बुधैस्वारः कम्प इत्यभिधीय्यते ६५
उच्चानुदात्तस्वाराणामेकीभावेन यस्वरः
प्रचयश्च धृतश्चासावुदात्तसदृश श्रुतिः ६६
मद्ध्यप्रयत्ननिर्वर्त्यमुक्तं स्वरविलक्षणम्
स्वरमेकश्रुतिं प्राहुर्वुणाघोषसमश्रुतिम् ६७
केचित्प्रचयमेवाहुस्वरमेकश्रुतिं बुधाः
अचामेव स्वरैर्योगो हलान्तदुपरागतः ६८
स्वराभिधानमेकेषामचान्तेन विदुर्बुधाः
उच्चान्निषादगान्धारौ नीचादृषभधैवतौ ६९
उत्भूतात् स्वरितत् षड्ज मद्ध्यमपञ्चमाः
उदात्तो ब्राह्मणो ज्ञेयोऽनुदात्तः क्षत्रियस्तथा ७०
विन्द्याच्च स्वरितं वैश्यं धृतश्शूद्र इति स्मृतः
तसर्वस्वरो मद्ध्ये आत्मनश्रेय उच्यता ७१
नित्यस्वरोच्चयोरेकं विनानीचः पदे स्वरः
क्वचिद्द्वौ वा त्रयो वाच्चान्नीचमन्यत्पदः स्मृतम् ७२

वैदेह्यः अग्नेयम्
नक्तोषासा यज्ञपताभ्य उ नं प्रणक्तु
स्यात्
लाहीनीचात् परस्वारो न वेत् ७३
इन्द्रियं वीर्यमयुवत
अग्नेयं यज्ञमच्परम्
स्वरात्परान्नयेन्नीचात्
प्रचयस्त्वं बहूनपि
अग्ने दुद्धूगह्य किं शलवन्य
उदात्तस्वारयोः पूर्वजृतनीचतरं वदेत् ७४
तयानो मृडतस्याः
पाक्याचिद्वसवोधीय्या चत्
उचैकादेश उच्चन्तु स्वारो
ऊभावः पूर्वरूपश्च दिक्भ्यो हीत्यादिना विना
प्रातरनुवाकमुपाकुर्यात्
दशसुमान्सूत्तिष्ठन् ७५
सो ब्रवीत्
ते ब्रुवन्
दिक्भ्यो हि समिरियन्ति
स्वारो नीचोदयोऽप्येवं नीचश्चोन्यापास्पदात् ७६
याज्यैषा वै
ऊत्यश्यामदिक्ष्वृद्ध्नुवन्ति
अन्यस्वारस्त्रयः कम्पस्तेष्वेव स्वरितेषु च
अणुमात्रन्निहत्यान्ते स्वकं --- मेव वा ७७
द्वितीयं वा तुरीयं वा भागमित्यपरे विदुः
वीर्यामृणाव्यप्रव्यभजन्त

सोग्यपोऽसिभ्यमष्ठ्रम्रियत ७८
तेभ्यन्न्योन्यन्न्यमुपाधावन्
स्वाद्ध्यायब्राह्मणेऽप्येवमुदात्ते परतस्थिते
तेन योभ्यस्मत्
उच्चोदय उदात्तस्तु स्वरित स्वरितोदये ७९
कम्पेषु पूर्वभागस्यादिति तत्र व्यवस्थितिः
वीर्यभ्यव्यभजन्त
अदीर्घं दीर्घवत्कुर्याद्द्विस्वरं यत्प्रदृश्यते ८०
कम्पोत्स्वरिताभिगीताद्ध्रस्वाकर्षणमेव तु
वीर्यभ्यव्यभजन्त
इत्येते कथितां बाह्याः प्रयत्ना वर्णसंश्रयाः ८१
येन निर्वर्त्यते वर्णाः करणन्तदुदीरितम्
जिह्वामूलमवर्णस्याप्यनुस्वारविसर्गयोः ८२
तस्याधो भाग उददिष्ट उत्सृष्टश्च मनीषिभिः
जिह्वामद्ध्यमिवर्णस्य स्याच्च वर्गकारयोः ८३
तस्यादौ तु वकारस्याप्येकारैकारयोस्तथा
ऋवर्णस्य लृवर्णस्य जिह्वाग्रं सतवर्गयोः ८४
काठकोऽन्तस्य मद्ध्यन्तु भवेद्रेफलकारयोः
षकारस्य टवर्गस्य जिह्वाग्रं वेष्टितम्मतम् ८५
शेषा स्वस्थानकरणा विशेषस्त्वत्र कथ्यते
ओकारौकारयोरोष्ठे द्वयं करणमिष्यते ८६
कुवोरुपद्ध्मानि यस्याप्यथरोष्ठ उदाहृतः
इह कीर्त्तिमवाप्नोति ब्रह्मलोके महीय्यते ८७
इति वासिष्ठशिक्षा समाप्ता